अग्निः पूषाथ वितथो गृहक्षेत्रयमावपि ।
गन्धर्व्वभृङ्गराजौ च मृग एते तु दक्षिणे ॥
प्रतीच्यां प्रथमं पितृगणा दौवारिकस्ततः ।
सुग्रीवः पुष्पदन्तश्च पञ्चमस्तु जलाधिपः ॥
असुरश्च तथा शेषो वायुरेते प्रकीर्त्तिताः ।
रोगाहिमुखभल्लाटाः सोमसूर्य्यौऽदितिस्तथा ॥
दितिश्चैतास्तु विज्ञेया दिश्युदीच्यां व्यवस्थिताः ।

अन्तःकोष्ठस्तु ईशानो द्वितीयकोणकोष्ठे आपः । अन्तराग्नेयकोणकोष्ठे सावित्रिः । नैर्ऋतकोणकोष्ठे जयः । वायव्यकोणकोष्ठे रुद्रः । मध्यनवपदस्य पूर्व्वत्रिपदे अर्य्यमा । आग्नेयतृतीयकोणकोष्ठे सावित्रिः । नवपददक्षिणत्रिपदे विवस्वान् । नैर्ऋततृतीयकोणकोष्ठे विबुधाधिपः । नवपदपश्चिमत्रिपदे मित्रः । वायव्यतृतीयकोणकोष्ठे राजयक्ष्मा । नवपदोत्तरत्रिपदे पृथ्वीधरः । ईशानतृतीयकोणकोष्ठे आपवत्सः । मध्ये नवपदे ब्रह्मा । एषां गन्धादिभिः पदार्थानुसमयेन पूजा । ततः पायसबलिः । एष पायसबलिः शिखिने नम इति मन्त्रेण गृह्योक्तविधिनाग्निमुपसमाधाय शिख्यादिभ्यो दश दश ब्रह्मणे शतं होमः । तत आग्नेये उक्तरीत्या ब्रह्मस्थाने विष्णुपूजनम् । श्रीपूजनम् । गणेशपूजा । वास्तुपुरुषपूजा । मध्ये वस्त्रयुग्मच्छन्नपञ्चरत्नपञ्चपल्लवशोभिततीर्थजलपूर्णार्घ्यकुम्भस्थापनम् । तदुत्तरे तादृशकर्करी । तत्र ब्रह्मपूजा । दिक्ष्विन्द्रादिपूजा । कर्करीं गृहीत्वा प्रासादसीमाप्रादक्षिण्येन जलधाराभ्रामणम् । जलधारायां सप्तबीज-